# काली कर्पूर स्तोत्रम्

कर्पूर मध्यमान्त्य स्वरपर रहितं स इन्दु वामाक्षि युक्तं
बीजं ते मातरेतत् त्रिपुरहरवधुं त्रिष्कृतं ये जपन्ति ।
तेषां गद्यानि पद्यानि च मुखकुहरात् उल्लसन्त्येववाचः
स्वच्छन्दं – ध्वान्तधाराधर – रुचिरुचिरे सर्वसिद्धिं गतानाम् ॥ 1 ॥

ईशानः सेन्दु वाम श्रवण परिगतो बीजं अन्यन् महेशि
द्वन्द्वं ते मन्दचेता यदि जपति जनो वारं एकं कदाचित् ।
जित्वा वाचामधीशं धनदं अपि चिरं मोहयन् अंबुजाक्षी
वृन्दं चन्द्रार्धचूडे प्रभवति स महाघोररावावतंसे ॥ 2 ॥

ईशो वैश्वानरस्थः शशधर विलसत् वामनेत्रेण युक्तं
बीजं ते द्वन्द्वं अन्यद् विगलित चिकुरे कालिके ये जपन्ति ।
द्वेष्टारं ते निहन्ति त्रिभुवनं असिते वश्यभावं नयन्ति
सृक्क द्वन्द्वास्त्रधारा द्वयधरवदने दक्षिणे कालिकेति ॥ 3 ॥

ऊर्ध्वं वामे कृपाणं करतलकमले छिन्नमुण्डं तथाऽधः
सव्ये भीतं वरं च त्रिजगदघहरे दक्षिणे कालिके च ।
जप्त्वै तन्नामवर्णं तव मनुविभवं भावयन् तस्तदर्थं
तेषां इष्टौ करस्थाः प्रकटित वदने सिद्धयः त्र्यम्बकस्य ॥ 4 ॥

वर्गाद्यं वह्निसंस्थं विधुरति ललितं तत्त्रयं कूर्चयुग्मं
लज्जाद्वन्द्वं च पश्चात् स्मितमुखि तदधष्ठद्वयं योजयित्वा ।
मातर्ये वा जपन्ति स्मरहरमहिले भावयं ते स्वरूपं
ते लक्ष्मीलास्यलीला कमलदृशः कामरूपा भवन्ति ॥ 5 ॥

प्रत्येकं वा द्वयं वा त्रयमपि च परं बीजं अत्यन्त गुह्यं
त्वन् नाम्ना योजयित्वा सकलमपि सदा भावयन्तो जपन्ति ।
तेषां नेत्रारविन्दे विहरति कमला वक्त्र शुभ्रांशुबिंबे
वाग्देवी दिव्यमुण्ड स्रगतिशय लसत्कण्ठ पीनस्तनाढ्ये ॥ 6 ॥

गतासूनं बाहु प्रकरकृतकाञ्ची परिलसन्
नितम्बां दिग्वस्त्रां त्रिभुवनविधात्रीं त्रिनयनाम् ।
श्मशानस्थे तल्पे शवहृदि महाकालसुरत प्रसक्तां
त्वां ध्यायन् जननि जडचेता अपि कविः ॥ 7 ॥

शिवाभिः घोराभिः शवनिवह मुण्डास्थि निकरैः
परं सङ्कीर्णायां प्रकटितचितायां हरवधूम् ।
प्रविष्टां सन्तुष्टां उपरि सुरते नाऽति युवतीं
सदा त्वां ध्यायन्ति क्वचिदपि न तेषां परिभवः ॥ 8 ॥

वदामस्ते किं वा जननि वयमुच्चैः जडधियो
न धाता न अपि ईशो हरिरपि न ते वेत्ति परमम् ।
तथाऽपि त्वद्भक्तिः मुखरयति चा अस्माकं असिते
तदेतत् क्षन्तव्यो न खलु पशुरोषः समुचितः ॥ 9 ॥

समन्ताद् आपीन स्तन जघन धृग् यौवनवती
रतासक्तो नक्तं यदि जपति भक्तस्तव मनुम् ।
विवासास्त्वां ध्यायन् गलित चिकुरः तस्य वशगाः
समस्ताः सिद्धौगा भुवि चिरतरं जीवति कविः ॥ 10 ॥

समः स्वस्तीभूतो जपति विपरीतो अपि स सदा
विचिन्त्य त्वां ध्यायन् अतिशय महाकाल सुरताम् ।
तदा तस्य क्षोणीतल विहरमाणस्य विदुषः
कराम्भोजे वश्याः स्मरहरवधूः सिद्धिनिवहाः ॥ 11 ॥

प्रसूते संसारं जननि जगतीं पालयति वा
समस्तं क्षित्यादि प्रलयसमये संहरति च ।
अतस्त्वं धाताऽपि त्रिभुवनपतिः श्रीपतिरपि
महेशोऽपि प्रायः सकलमपि किं स्तौमि भवतीम् ॥ 12 ॥

अनेके सेवन्ते भवदधिक गीर्वाणनिवहा
विमूढास्ते मातः किमपि न हि जानन्ति परमम् ।
समाराध्यां आद्यां हरि हर विरञ्च्यादि विबुधैः
प्रपन्नोऽस्मि स्वैरं रतिरस महानन्द निरताम् ॥ 13 ॥

धरित्री कीलालं शुचिरपि समीरोऽपि गगनं
त्वमेका कल्याणी गिरिशरमणी कालि सकलम् ।
स्तुतिः का ते मातः निजकरुणया मामगतिकं
प्रसन्ना त्वं भूया भवमनु न भूयान्मम जनुः ॥ 14 ॥

श्मशानस्थः स्वस्थो गलितचिकुरो दिक्पटधरः
सहस्रं त्वर्काणां निजगलित वीर्येण कुसुमम् ।
जपं त्वत् प्रत्येकं मनुमपि तव ध्याननिरतो
महाकालि स्वैरं स भवति धरित्री परिदृढः ॥ 15 ॥

गृहे सम्मार्जन्या परिगलितवीर्यं हि चिकुरं
समूलं मध्यान्हे वितरति चितायां कुजदिने ।
समुच्चार्यं प्रेम्णा मनुमपि सकृत्कालि सततं
गजारूढो याति क्षितिपरिवृढः सत्कविवरः ॥ 16 ॥

स्वपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो
पुरो ध्यायन् ध्यायन् जपति यदि भक्तः तव मनुम् ।
स गन्धर्वश्रेणी पतिरपि कवित्वां अमृतनदी
नदीनः पर्यन्ते परमपदलीनः प्रभवति ॥ 17 ॥

त्रिपञ्चारे पीठे शवशिवहृदि स्मेरवदनां
महाकालेन उच्चैमदनरस लावण्य निरताम् ।
समासक्तो नक्तं स्वयमपि रतानन्द निरतो
जनो योध्यायेत् त्वामपि जननि स स्यात् स्मरहरः ॥ 18 ॥

सलोमास्थि स्वैरं पललमपि मार्जारं असिते
परं चोष्ट्रं मेषं नर महिषयोः छागमपि वा ।
बलिं ते पूजायां अपि वितरतां मर्त्यं असतां
सतां सिद्धिः सर्वा प्रतिपदं अपूर्वा प्रभवति ॥ 19 ॥

वशी लक्षं मन्त्रं प्रजपति हविष्याशनरतो
दिवा मातर्युष्मच्चरण युगलध्यान निरतः ।
परं नक्तं नग्नो निधुवन विनोदेन च मनं
जनो लक्षं सम्यक् स्मर हरसमानः क्षितितले ॥ 20 ॥

इदं स्तोत्रं मातस्तव मनुसमुद्धारण जप
स्वरूपाख्यं पादांबुजयुगल पूजाविधियुतम् ।
निशार्धे वा पूजासमयमधि वा यस्तु पठति
प्रलापस्तस्या अपि प्रसरति कवित्वां अमृतरसः ॥ 21 ॥

कुरङ्गाक्षीवृन्दं तमनुसरति प्रेमतरलं
वशस्तस्य क्षोणीपतिरपि कुबेर प्रतिनिधिः ।
रिपुः कारागरं कलयति च तत्केलि कलया
चिरं जीवन्मुक्तः स भवति सुभक्तः प्रतिजनुः ॥ 22 ॥

॥ इति श्री महाकाल विरचितं काली कर्पूर स्तोत्रं समाप्तम् ॥